# रेणुकास्तोत्रं श्रीधरस्वामिकृतम्

{॥ रेणुकास्तोत्रं श्रीधरस्वामिकृतम् ॥}

श्रीगणेशाय नमः ।

शिवां शान्तरूपां मनोवागतीतां
निजानन्दपूर्णां सदाऽद्वैतरूपाम् ।
परां वेदगम्यां परब्रह्मरूपां
भजे रेणुकां सर्वलौकैकवेद्याम् ॥ १॥

सदाचारसद्भक्तिबोधादिभिर्या
गुरोरङ्घ्रिशुश्रूषयां मुख्यवृत्त्या ।
सुवेद्या सुलभ्या परानन्दपूर्णा
भजे रेणुकां तां विमोहप्रशान्त्यै ॥ २॥

श्रुतिर्नेतिनेतीति सर्वं निरस्य
वदत्येकमाद्यं विभुं चित्सुखं यत् ।
तदेवावशिष्टं स्वरूपं विशुद्धं
भजे रेणुकां तां सदा मृत्युहीनाम् ॥ ३॥

यदानन्दसिन्धौ निमग्नो न पश्येद्-
अहो कर्मजालं फलं वा तदीयम् ।
न जैवं न शैवं जगन्नैव मायां

चिदेकस्वरूपां भजे रेणुकां ताम् ॥ ४॥

अनेकान्तिकां सर्वभेदातिरूपां

तमोऽज्ञानदुःखातिगां शुद्धरूपाम् ।

सदाऽध्यात्मविद्याप्रदानैकशीलं

भजे रेणुकां मुक्तिसौख्याधिदेवीम् ॥ ५॥

त्रितापप्रशन्त्यै समाराध्यमानां

सदा जीवलोके स्वसौख्यप्रदात्रीम् ।

भवोम्बोधिसेतुं चिदानन्दकन्दां

भजे रेणुकां ज्ञानमुद्रैकलक्ष्याम् ॥ ६॥

सदा भक्तहृत्कौमुदीं भद्रभद्रां

सदोङ्कारवाच्यां वरेण्यां शरण्याम् ।

स्वभक्तार्तिनाशां शुभाङ्गां गुणाढ्यां

भजे रेणुकां भक्तसौख्याब्धिरूपाम् ॥ ७॥

सदा भक्तवात्सल्यपूर्णां सुरम्यां

सुरेन्द्रादिभिः स्तूयमानां सुषूक्तैः ।

सदा भक्तवृन्दैश्च संसेव्यमानां

भजे रेणुकां भक्तभाग्यां भवानीम् ॥ ८॥

पठेद्यः सदा भक्तियुतो विशुद्धः

स्ववर्णाश्रमाचारतो नित्ययुक्तः ।

स मुक्तः कृती रेणुकायाः प्रसादात्

सदा राजते राजते लोकपूज्या ॥ ९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यसद्गुरुभगवता श्रीधरस्वामिना

विरचितं श्रीरेणुकास्तोत्रं सम्पूर्णम् ॥

Translation at http://ioustotra.blogspot.com/2010/10/shri-renuka-stotramtml

Encoded by Kaushal S. Kaloo kaushalskaloo at gmail.com

Please send corrections to sanskrit@cheerful.com

Last updated त्oday

http://sanskritdocuments.org

Renuka Stotram 3 ( By Sridhara Swami ) Lyrics in Devanagari PDF
% File name : reNukAstotramshrIdharasvAmi.itx
% Location : doc_devii
% Author : Shridhar Swami
% Language : Sanskrit
% Subject : philosophy/hinduism/religion
% Transliterated by : Kaushal S. Kaloo kaushalskaloo at gmail.com
% Proofread by : Kaushal S. Kaloo kaushalskaloo at gmail.com
% Translated by : http://ioustotra.blogspot.com/2010/10/shri-renuka-stotram.html
% Latest update : June 30, 2013
% Send corrections to : Sanskrit@cheerful.com